॥ श्रीवरदराजाचार्यविरचिता ॥

# लघुसिद्धान्तकौमुदी

तिङन्ते

## आत्मनेपदप्रक्रिया परस्मैपदप्रक्रिया च

लघुकौमुदी के ३५ संस्करणों पर आधारित रंगीन संस्करण

इस विषय के शोधपूर्ण सरलव्याख्यान पद्धति पर आधारित वीडियो हमारे चैनल पर उपलब्ध हैं।



संस्कृतसारः

छिद्यन्ते सर्वसंशयाः

**परामर्शकौ**

प्रो. ब्रजभूषणओझा

प्रो. नीलाभतिवारी

इन स्लाइड्स के माध्यम से पढ़ने के लिए अथवा इनकी व्याख्या देखने के लिए हमारे चैनल का अनुसरण करें।



YouTube संस्कृतसारः @sanskrit sar


**प्रस्तोता**

डॉ. श्रीओमशर्मा (व्याकरणविद्याशाखा)

केन्द्रीयसंस्कृतविश्वविद्यालयः,



श्रीरघुनाथकीर्तिपरिसरः देवप्रयागः (उत्तराखण्डः)

# निवेदनम्

यह पठन-पाठनसामग्री ‘संस्कृतव्याकरण’ में शीघ्र प्रवेशेच्छुक-छात्राध्यापकों के हेतु ‘संस्कृतसारः’ इस समाजसेवी संस्था द्वारा संस्कृतभाषा की सेवार्थ प्रस्तुत की जा रही है। अतः आपसे निवेदन है कि इन ‘लघुसिद्धान्तकौमुदी’ स्लाइड्स् व वीडियोज् का अपने पठन-पाठन में पर्याप्त उपयोग कर संस्कृत की सेवा में हमारा सहयोग करें। इन स्लाइड्स् को शुद्धतम बनाने का प्रयास करने पर भी ऐसा सम्भव है कि इसमें कहीं त्रुटि रह गयी हों अतः उनके सुधार के लिए हमें ईमेल द्वारा सूचित करें।



दिनाङ्कः-

27.06.2022

अस्माकं सम्पर्कसूत्राणि—
e-mail अणुवाक्— samskritsaarah@gmail.com
YOUTUBE — संस्कृतसारः @sanskrit sar
FACEBOOK— @sanskrit_shiksha संस्कृतशिक्षा

निवेदकः-

संस्कृतशिक्षा-परिवारः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# तिङन्ते आत्मनेपदव्यवस्था

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते आत्मनेपदप्रक्रिया)

## ❖ अर्थविशेषे

- कर्तरि कर्मव्यतिहारे
- गन्धनावक्षेपणसेवन-साहसिक्यप्रतियत्न-प्रकथनोपयोगेषु
- भुजोऽनवने

## ❖ उपसर्गप्रयोगे

- नेर्विशः
- परिव्यवेभ्यः क्रियः
- विपराभ्यां जेः
- समवप्रविभ्यः स्थः

## ❖ अर्थे उपसर्गे च/अन्यः

- अपह्नवे ज्ञः
- अकर्मकाच्च
- उदश्चरः सकर्मकात्
- समस्तृतीयायुक्तात्
- दाणश्च सा चेच्चतुर्थ्यर्थे
- पूर्ववत्सनः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# अर्थविशेषे आत्मनेपदव्यवस्था



❖ आत्मनेपदविधायकं विधिसूत्रम्—

सूत्रम्— कर्तरि कर्मव्यतिहारे (१,३.१४)

अर्थः— क्रियाविनिमये द्योत्ये कर्तर्यात्मनेपदम्। व्यतिलुनीते। अन्यस्य योग्यं लवनं करोतीत्यर्थः॥

❖ आत्मनेपदनिषेधकं सूत्रम्—

सूत्रम्— न गतिहिंसार्थेभ्यः (१,३.१५)

अर्थः— गत्यर्थात् हिंसार्थाच्च धातोः क्रियाविनिमये द्योत्ये कर्त्तर्यात्मनेपदं न स्यात्। व्यतिगच्छन्ति। व्यतिघ्नन्ति॥

वि अति+ लुनीते

वि अति+ गच्छन्ति

वि अति+ घ्नन्ति

# उपसर्गयोगे आत्मनेपदव्यवस्था



❖ आत्मनेपदविधायकं विधिसूत्रम्—

सूत्रम्— नेर्विशः (१,३.१७)

अर्थः— निविशते॥

❖ आत्मनेपदविधायकं विधिसूत्रम्—

सूत्रम्— परिव्यवेभ्यः क्रियः (१,३.१८)

अर्थः— परिक्रीणीते। विक्रीणीते। अवक्रीणीते॥

❖ आत्मनेपदविधायकं विधिसूत्रम्—

सूत्रम्— विपराभ्यां जेः (१,३.१९)

अर्थः— विजयते। पराजयते॥

❖ आत्मनेपदविधायकं विधिसूत्रम्—

सूत्रम्— समवप्रविभ्यः स्थः (१,३.२२)

अर्थः— संतिष्ठते। अवतिष्ठते। प्रतिष्ठते। वितिष्ठते॥

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

# अर्थोपसर्गविशेषे ‘ज्ञा’धातोः आत्मनेपदव्यवस्था



❖ आत्मनेपदविधायकं विधिसूत्रम्—

**सूत्रम्— अपह्नवे ज्ञः (१,३.४४)**

**अर्थः—** अपपूर्वाज्ज्ञानातेरात्मनेपदं स्याद् अपह्नवे= अपलापे= छिपाना, इन्कार करना।

शतमपजानीते। अपलपतीत्यर्थः॥

❖ आत्मनेपदविधायकं विधिसूत्रम्—

**सूत्रम्— अकर्मकाच्च (१,३.४५)**

**अर्थः—** अकर्मकाच्च जानातेरात्मनेपदं स्यात्।

सर्पिषो जानीते। सर्पिषोपायेन प्रवर्तत इत्यर्थः॥

क्र्यादिगणे ‘ज्ञा अवबोधने’ इति परस्मैपदिषु पठितः।

- ‘धातूनामनेकार्थाः’ इति सिद्धान्तः।
- ज्ञा-धातुः ‘प्रवर्त्तते’ इत्यर्थे अकर्मकः।

# अर्थोपसर्गविशेषे 'चर्-दा'धातोः आत्मनेपदव्यवस्था



भ्वादिगणे 'चर्-दा' इति धातू परस्मैपदिषु पठितौ।

❖ आत्मनेपदविधायकं विधिसूत्रम्—

सूत्रम्— उदश्चरः सकर्मकात् (१,३.५३)

अर्थः— उदुपसर्गपूर्वात् चर्-धातोरात्मनेपदं स्यात्। धर्ममुच्चरते। उल्लङ्घ्य गच्छतीत्यर्थः॥

❖ आत्मनेपदविधायकं विधिसूत्रम्—

सूत्रम्— समस्तृतीयायुक्तात् (१,३.५४)

अर्थः—समुपसर्गपूर्वात् चर्-धातुर्यदि तृतीयान्तेन युक्तं तदात्मनेपदं स्यात्। रथेन सञ्चरते॥

❖ आत्मनेपदविधायकं विधिसूत्रम्—

सूत्रम्— दाणश्च सा चेच्चतुर्थ्यर्थे (१,३.५५)

अर्थः— सम्पूर्वाद्दाणस्तृतीयान्तेन युक्तादुक्तं= आत्मनेपदम् स्यात्, तृतीया चेच्चतुर्थ्यर्थे। दास्या संयच्छते कामी॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# सन्नन्तेष्वात्मनेपदमुत्परस्मैपदम् ?

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते आत्मनेपदप्रक्रिया)

❖ यदा सनः प्रकृतिरात्मनेपदी तदा आत्मनेपदविधायकं विधिसूत्रम्—

**सूत्रम्**— पूर्ववत्सनः (१,२.६२)

**अर्थः**—सनः पूर्वो यो धातुस्तेन तुल्यं सन्नन्तादप्यात्मनेपदं स्यात्। एदिधिषते॥

**अर्थात्**— जिस धातु से सन् प्रत्यय का विधान किया गया हो , ऐसी धातु यदि मूलरूप से आत्मनेपदी हो तो सन्नन्तधातु आत्मनेपद होता है। परस्मैपदी होने पर परस्मैपद तथा उभयपद होने पर उभय पद होता है।

❖ सनः किद्वद्विधायकं अतिदेशसूत्रम्—

**सूत्रम्**— हलन्ताच्च (१,२.१०)

**अर्थः**—इक्समीपाद्धलः परो झलादिः सन् कित्। निविविक्षते॥

एध्+ सन्
एध्+ इ सन्
एधिष
ए धिष् धिष् अ
एदिधिष+ ते
एदिधिषते

नि+विश्+ सन्
निविक्ष
निविविक्ष+ ते
निविविक्षते

❖ ‘विश्’धातुः परस्मैपदी। नि-उपसर्गपूर्वात् ‘नेर्विश’ इत्यनेन आत्मनेपदविधानम्। अतः सन्नन्तादप्यात्मनेपदमेव।

# कुत्र 'डुकृञ् करणे' इति धातोरात्मनेपदमेव ?



❖ आत्मनेपदविधायकं विधिसूत्रम्—

**सूत्रम्—** गन्धनाऽवक्षेपण-सेवन-साहसिक्य-प्रतियत्न-प्रकथनोपयोगेषु कृञः॥ (१,३.३२)

**अर्थः—** गन्धनं सूचनम्। उत्कुरुते। सूचयतीत्यर्थः।

अवक्षेपणं भर्त्सनम्। श्येनो वर्तिकामुत्कुरुते। भर्त्सयतीत्यर्थः।

हरिमुपकुरुते। सेवत इत्यर्थः।

परदारान् प्रकुरुते। तेषु सहसा प्रवर्तते।

एधोदकस्योपस्कुरुते। गुणमाधत्ते।

कथाः प्रकुरुते। प्रकथयतीत्यर्थः।

शतं प्रकुरुते। धर्मार्थं विनियुङ्क्ते।

एषु किम् ? कटं करोति॥

भुजोऽनवने॥ ओदनं भुङ्क्ते। अनवने किम् ? महीं भुनक्ति॥

अवनम्= रक्षणम्।
तद्भिन्नम्
अनवनम्

इत्यात्मनेपदप्रक्रिया॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# तिङन्ते परस्मैपदव्यवस्था

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते परस्मैपदप्रक्रिया)

❖ अर्थविशेषे



लघुसिद्धान्तकौमुद्यां नास्ति।

❖ उपसर्गप्रयोगे

- अनुपराभ्यां कृञः
- अभिप्रत्यतिभ्यः क्षिपः
- प्राद्वहः
- परेर्मृषः
- व्याङ्परिभ्यो रमः
- उपाच्च

❖ अर्थे उपसर्गे च/अन्यः



लघुसिद्धान्तकौमुद्यां नास्ति।

# उपसर्गप्रयोगे परस्मैपदव्यवस्था



❖ परस्मैपदविधायकं विधिसूत्रम्—

**सूत्रम्—** अनुपराभ्यां कृञः (१,३.७९)

**अर्थः—** कर्तृगे च फले गन्धनादौ च परस्मैपदं स्यात्। अनुकरोति। पराकरोति॥

❖ परस्मैपदविधायकं विधिसूत्रम्—

**सूत्रम्—** अभिप्रत्यतिभ्यः क्षिपः (१,३.८०)

**अर्थः—** अभि-प्रति-अत्युपसर्गपूर्वात् क्षिपतेः परस्मैपदं स्यात्।

❑ क्षिपँ प्रेरणे। स्वरितेत्। अभिक्षिपति॥

❖ परस्मैपदविधायकं विधिसूत्रम्—

**सूत्रम्—** प्राद्वहः (१,३.८१)

**अर्थः—** प्रवहति॥

'डुकृञ् करणे' इत्युभयपदी।
अनुकरोति— अनुकरणं करोति।
पराकरोति— दूरीकरोति।

अभिक्षिपति — अभिभूतं करोति।
प्रतिक्षिपति — निवारयति।
अतिक्षिपति

'वहँ प्रापणे' स्वरितेत्।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उपसर्गप्रयोगे परस्मैपदव्यवस्था



❖ परस्मैपदविधायकं विधिसूत्रम्—

**सूत्रम्—** परेर्मृषः (१,३.८२)

**अर्थः—** परिमृष्यति॥

‘मृषँ तितिक्षायम्’ स्वरितेत्।

परिमृष्यति— असूयां करोति।

परस्मैपदविधायकं विधिसूत्रम्—

**सूत्रम्—** व्याङ्परिभ्यो रमः (१,३.८३)

**अर्थः—** व्याङ्परिभ्यो रमतेः परस्मैपदं स्यात्।

रमुँ क्रीडायाम्॥ विरमति॥

| | |
|---|---|
| विरमति — | विरतो भवति। |
| आरमति — | सर्वत्र रमणं करोति। |
| परिरमति — | प्रसन्नो भवति। |

परस्मैपदविधायकं विधिसूत्रम्—

**सूत्रम्—** उपाच्च (१,३.८४)

**अर्थः—** यज्ञदत्तमुपरमति। उपरमयतीत्यर्थः।

अन्तर्भावितण्यर्थोऽयम्॥

॥ इति परस्मैपदप्रक्रिया॥ इति पदव्यवस्था॥

**०१. 'कर्मव्यतिहारे' इति पदस्य कोऽर्थः ?**

क. कर्मद्योत्ये

**ख.क्रियाविनिमये**

ग. क्रियायाम्

घ. उपर्युक्तानि सर्वाणि

**०२. व्यतिलुनीते इत्यत्र धातुर्वर्त्तते—**

क. व्यति

ख. लुनी

**ग. लूञ्**

घ. लु

**०३.असमीचीनं प्रयोगं चिनुत—**

क. व्यतिगच्छन्ति

ख. व्यतिघ्नन्ति

ग. निविशते

**घ. प्रविशते**

**०४. विक्रीणीते इत्यत्रात्मनेपदं केन सूत्रेण—**

क. न गतिहिंसार्थेभ्यः

**ख.परिव्यवेभ्यः क्रियः**

ग. अकर्मकाच्च

घ. उदश्चरः सकर्मकात्

**०५. शुद्धं विकल्पं चिनुत—**

क. नेर्विशः— निविशते।

ख. विपराभ्यां जेः— विजयते। पराजयते ।

ग. समवप्रविभ्यः स्थः— संतिष्ठते। अवतिष्ठते। प्रतिष्ठते। वितिष्ठते।

**घ. उपर्युक्तानि सर्वाणि ।**

**०६. शतमपजानीते इत्यस्य कोऽर्थः—**

**क. अपलपति**

ख. प्रतिष्ठते

ग. प्रवर्त्तते

घ. जानाति

**०७. 'सर्पिषो जानीते' इत्यत्रात्मनेपदं केन—**

**क. अकर्मकाच्च**

ख. हलन्ताच्च

ग. समस्तृतीयायुक्तात्

घ. भुजोऽनवने

**०८. 'चर्'धातुः वर्त्तते—**

क. आत्मनेपदी

**ख.परस्मैपदी**

ग. उभयपदी

घ. सप्तपदी

**०९. शुद्धं चिनुत—**

क. रथं सञ्चरते।

**ख.रथेन सञ्चरते।**

ग. रथस्य सञ्चरते।

घ. रथे सञ्चरते।

**१०. 'दास्या संयच्छते कामी' इत्यत्र तृतीया कस्मिन्नर्थे—**

क. करणे

ख. कर्तरि

ग. सम्पूर्वकदाणर्थे

घ. चतुर्थ्यर्थे

**११. 'पूर्ववत्सनः' सूत्रविषये इदं कथनमसङ्गतम्—**

क. एदिधिषते इत्यत्रात्मनेपदमनेन सूत्रेण भवति।

ख. यदि सनः प्रकृतिरात्मनेपदी तदा तत्तुल्यात्मनेपदं सन्नन्ताद्भवति।

ग. यदि सनः प्रकृतिपरस्मैपदी तदा तत्तुल्यपरस्मैपदं सन्नन्ताद्भवति।

**घ. यदि सनः प्रकृत्युभपदी तदापि तत्तुल्यात्मनेपदं सन्नन्ताद्भवति।**

**१२. 'निविविक्षते' इत्यत्र गुणाभावस्य किं कारणम् ?**

**क.हलन्ताच्च इत्यनेन कित्वम्।**

ख. हलन्ताच्च इत्यनेन ङित्वम्।

ग. अकर्मकाच्च इत्यनेन कित्वम्।

घ. अकर्मकाच्च इत्यनेन ङित्वम्।

**१३. गन्धनाऽवक्षेपण..........इति सूत्रं पूरयत—**

क. गन्धनाऽवक्षेपसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः।

ख. गन्धाऽवक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः।

**ग. गन्धनाऽवक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः।**

घ. गन्धनाऽवक्षेपणसेवनसाहसिक्यप्रतियत्नकथनोपयोगेषु कृञः।

**१४. प्रतियत्नस्य किमुदाहरणम्—**

क. परदारान् प्रकुरुते। तेषु सहसा प्रवर्तते।

**ख.एधोदकस्योपस्कुरुते। गुणमाधत्ते।**

ग. कथाः प्रकुरुते। प्रकथयतीत्यर्थः।

घ. शतं प्रकुरुते। धर्मार्थं विनियुङ्क्ते।

**१५. 'कटं करोति' इत्यत्रात्मनेपदं कथं न भवति ?**

क. ञित्वाभावात्

ख. कर्मत्वात्

**ग. गन्धनाद्यर्थाभावात्**

घ. क्रियायाः फलमकर्तृगामित्वात्

**१६. 'गन्धनम्' इति पदस्य कोऽर्थः—**

**क.सूचनम्**

ख. प्रवर्तनम्

ग. गन्धग्रहणम्

घ. गन्धप्रसारणम्

**१७. एतेषु शुद्धं चिनुत—**

क. महीं भुङ्क्ते।

ख. ओदनं भुनक्ति।

ग. शत्रून् पराजयति।

**घ. सर्पिषो जानीते।**

**१८. 'अनवने' इत्यस्य कोऽर्थः—**

क. रक्षणम्

**ख.भक्षणम्**

ग. प्रक्षणम्

घ. लक्षणम्

**१९. एतेषु आत्मनेपदमेव भवति—**

क. अनु+ कृ

ख. परा+कृ

ग. कृ

**घ. उद्+कृ**

**२०. प्रेरणार्थकः 'क्षिप्'धातुर्वर्त्तते—**

क. अनुदात्तेत्

**ख.स्वरितेत्**

ग. ङित्

घ. उगित्

**२१. प्रवहति इत्यत्र परस्मैपदं केन—**

क. उदश्चरः सकर्मकात्

**ख.प्राद्वहः**

ग. परेर्मृषः

घ. न केनापि

**२२. 'परेर्मृषः' इति सूत्रस्य किमुदाहरणम्—**

क. परिमृषति

ख. परिमृषते

**ग. परिमृष्यति**

घ. परिमृष्यते

**२३. एतेषु समीचीनं नास्ति—**

क. विरमति

ख. आरमति

ग. परिरमति

**घ. रमति**

**२४. ' यज्ञदत्तम् उपरमति' इति विषये किमसङ्गतम्—**

क. अन्तर्भावितण्यर्थः।

**ख.अकर्मकः।**

ग. 'उपाच्च' इत्यनेन परस्मैपदम्।

घ. उपरमयतीत्यर्थः।

**२५. अनेन सूत्रेण आत्मनेपदविधानं न भवति—**

**क.हलन्ताच्च**

ख. भुजोऽनवने

ग. नेर्विशः

घ. पूर्ववत्सनः